अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [३४]



श्रीगुणचन्द्रसूरिविरचितटीकाविभूषितो

# हैमविभ्रमः।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
श्रावकप-हरगोविन्ददास-बेचरदासाभ्यां संशोधितः।

स च

रङ्गूननगरवास्तव्यश्रीजैनश्वेताम्बर-
सङ्घसाहाय्येन

## वाराणस्यां

श्रेष्ठिमूरामार्हत्तनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रितः प्रकाशितश्च।

वीरसंवत् २४३९।

मूल्यमाणकचतुष्टयम्।

YASHOVIJAYA JAINA GRANTHAMALA [34]

THE

# HAIMVIBHRAMA

WITH THE COMMENTARY

OF

**GUNACHANDRA SURI**

EDITED BY

SHRAVAK PANDIT HARGOVINDDAS

AND

SHRAVAK PANDIT BECHARDAS,

MOST DEVOTED SERVANTS OF
HIS HOLINESS SHASTRA VISHARAD JAINACHARYA
SHEE VIJAYA DHARMA SURI

WITH

THE PECUNIARY HELP OF
SHREE SHVETAMBAR SANGHA
OF
RANGOON

PRINTED AND PUBLISHED
BY
HARSHCHAND BHURABHAI,
Proprietor of Dharmabhyudaya Press
BENARES

Veer-Era, 2439

Price 4 annas.

# प्रस्तावना.

कातन्त्रविभ्रमनाम्ना विश्रुतस्य कारिकारूपस्य शब्दतो लघीयसोऽपि शब्दशास्त्रविषयकव्युत्पत्तिप्रकर्षाधायकतया प्रयोजनतो महीयसो ग्रन्थस्य सर्वव्याकरणसाधारणोपयोगितया तत्तद्व्याकरणपरिशीलिना सुखेन तत्र प्रवेशमासूत्रयितुमनेके विद्वांस स्वस्वाभिमतव्याकरणानुसारेण बहूर्विवृत्तीर्व्यरचन्, यासा सान्निध्य विना क्लेशमधिकारित्वावगमाय तत्तद्व्याकरणोपलक्षिते विभ्रमनाम्नि ग्रन्थनाम पर्यवीवृतत्। श्रीसिद्धहेमचन्द्रव्याकरणमप्यधीतवन्तोऽध्येतारश्च मा भूवन्नेनात्यावश्यकेन ज्ञानफलेन वञ्चिता इति कृपापरीतमानसै श्रीगुणचन्द्रसूरिभिरपि हैमव्याकरणानुकूल्येन तत्त्वप्रकाशिकानाम्नी टीका विनिरमायि, यया ग्रन्थस्यास्य "हैमविभ्रम" इत्यभिधा प्रसिद्धिमागता।

टीकाकारगणाभिमेतेषा सत्तासमयश्च

"अकारि गुणचन्द्रेण वृत्तिः स्वपरहेतवे।
देवसूरिक्रमाम्भोजचञ्चरीकेण सर्वदा॥"

इत्यस्यैव ग्रन्थस्य प्रान्तभागे देवसूरिशिष्यत्वमात्मन स्वय प्रकटयद्भिर्ग्रन्थकर्तृभिरेव देवसूरिसमानो निरूपयाम्बभूवे। देवसूरिसत्ताकालश्च

"शिखि-वेद-शिवे जन्म दीक्षा युग्म-शरे-श्वरे।
वेदा-ऽश्व-शकरे वर्षे सूरित्वमभवत्प्रभोः॥ २८६॥"
" रस-युग्म-रवौ वर्षे श्रावणे मासि सगते।
कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने॥ २८४॥
मर्त्यलोकस्थित लोक प्रतिबोध्य पुरन्दरम्।
बोधका इव ते जग्मुर्दिव श्रीदेवसूरयः॥ २८५

इत्यनेन प्रभावकचरित्रनिबद्धेन श्लोकत्रितयेन, अन्यैश्चापि प्रमाणनयतत्त्वालोकालङ्कारप्रस्तावनायाममन्निर्दिष्टे प्रमाणैर्विक्रमीय द्वादशशताब्दीरूप सन्देहमन्तरेण विनिर्णीयते स्म । किञ्च,

"पट्तर्ककर्कशमतिः कविचक्रवर्ती
शब्दानुशासनमहाम्बुधिपारदृश्वा ।
शिष्याम्बुजप्रकरजृम्भणचित्रभानुः
कक्कल एव सुकृती जयति स्थिरायाम् ॥ ५ ॥"

' इति पण्डितपुण्डरीकश्रीकक्कलोपदेशेन " इत्यादिनाऽन्यत्र वृत्तेरवसाने टीकाकृद्भिः प्रस्तुतटीकाकृतावुपन्देष्टृत्वेन प्रतिज्ञातस्य कक्कलनाम्नो विदुषः, यस्य

"काकलो नाम कायस्थकुलकल्याणशेखरः ।
अष्टव्याकरणाध्येता प्रज्ञाविजितभोगिराट् ॥ ११२ ॥
प्रभुस्तं दृष्टमात्रेण ज्ञाततत्त्वार्थमस्य च ।
शास्त्रस्य ज्ञापकं चाशु विदधेऽध्यापकं तदा ॥ ११३ ॥"

इत्यादिना प्रभाचन्द्रसूरिप्रभृतयोऽपि हेमचन्द्रसूरिप्रबन्धादौ स्मरन्ति, सिद्धराजमहाराजसमानकालिकत्वमपि गुणचन्द्रसूरीणामुक्तरूपं सत्तासमयं सवदति ।

इदंग्रन्थमुद्रणावसरेऽस्मद्गुरुवर्यशास्त्रविशारदजैनाचार्यश्रीमद्विजयधर्मसूरीश्वरैर्निज हस्तलिखितादर्शद्वयमुपलम्भितम्, इति भूयस्तै रन्वमाहिष्वहि ।

चित्तावधानेन पुस्तकद्वयसाहाय्येन सशोधितेऽस्मिन् ग्रन्थे दुर्वारदृष्टिदोषान्निाऽवशिष्टा अशुद्धीः कृपाकलितस्वान्ता सुमनसः संशोधयन्तु

इति प्रार्थयेते
हरगोविन्द-बेचरदासौ

अर्हम्

॥ श्रीविजयधर्मसूरिगुरुभ्यो नमः ॥

श्रीगुणचन्द्राचार्यविरचित तत्त्वप्रकाशिकाख्यया टीकया समेतः

# श्रीहैमविभ्रमः ।

कस्य धातोस्तिवादीनामेकस्मिन् प्रत्यये स्फुटम् ।
परस्परविरुद्धानि रूपाणि स्युस्त्रयोदश ? ॥ १ ॥

निखिलजगदेकशरणं भव्याऽम्भोरुहविकासनपटिष्ठम् ।
मोहान्धकारभिदुरं श्रीवीरार्कं परं नौमि ॥ १ ॥
ऋषभाऽऽद्यास्तीर्थानन्यान् विघ्नसंघातघातकान्[1] ।
सुराऽसुरनराऽऽराध्यान् मुक्तिमार्गप्रकाशकान् ॥ २ ॥
यस्याः स्मरणमात्रेण प्रगल्भन्ते विपश्चितः ।
परोपकारकर्त्री तां वन्दे वाणीं वरप्रदाम् ॥ ३ ॥
सकलभुवनैकतिलकः कुमतध्वान्तकर्पणैकदक्षतमः ।
नित्योदितः स्थिरतरो जयति श्रीदेवसूरिरविः ॥ ४ ॥
सुखप्रबोधिका वृत्ती रूपसिद्धिसमन्विता ।
सिद्धहेमाऽनुसारेण क्रियते तन्त्रविभ्रमे ॥ ५ ॥

कस्य धातोस्तिवादीनां सबन्धिन्येकस्मिन् प्रत्यये परस्परसप्रत्तानि त्रयोदश रूपाणि स्युरिति प्रश्ने, तानि निर्णीयन्ते–गिरते अवपूर्वात् "अवात्"॥३।३।६७॥ इत्यात्मनेपदम्, अद्यतन्यामात्मनेपदम ध्यमपुरुषवचनं ध्वम्, "सिजद्यतन्याम्"॥३।४।५३॥ इति सिचि, इट् सिजाऽऽशिषोरात्मने॥४।४।३६॥ इडागमे,"सो धि वा"॥४।३।७२॥ इति सिचो लोपे,"अड् धातो –"॥४।४।२९॥ इत्यादिनाऽडागमे उपसर्गाऽका-

1 तीर्थमस्ति येषां तान् तीर्थकरानित्यर्थः ।

रस्य परेण समानेन दीर्घत्वे, "नामिनो गुणोऽक्ङिति" ॥४।३।१॥ इति गुणे, "धुटो धुटि स्वे वा" ॥४।४।३५॥ इत्यादिना पक्षे दीर्घत्वे अवागरिध्वम्, अवागरीध्वम्, "नवा स्वरे" ॥२।३।१०॥ इति लत्वे अवागलिध्वम्, अवागलीध्वम्, तथा "हान्तस्थाद् आड्भ्यां वा" ॥२।१।८१॥ इति पक्षे ढत्वे अवागरिढ्वम्, अवागरीढ्वम्, अवागलिढ्वम्, अवागलीढ्वम्, तथा "स्वरग्रह" ॥ ३।४।६९ ॥ इत्यादिना ञिटि, "नामिनोऽकलिहले" ॥ ४।३।५१ ॥ इति वृद्धौ अवाऽगारिढ्वम्, अवाऽगालिढ्वम्, अवागारिध्वम्, अवागालिध्वम्, ञिडभावपक्षे च "क्ङिता क्ङिलीन" ॥ ४।४।११६ ॥ इति इडादेशे, "स्वादेर्नामिनो" ॥ २।१।६३ ॥ इत्यादिना उपान्त्यस्वरदीर्घत्वे, "नाम्यन्तात्" ॥२।१।८०॥ इत्यादिना ढत्वे अवागाढ्वम्। तिबादिसत्रप्रसङ्गावाद् अन्यद् अपि किञ्चिदुच्यते, तथाहि-

जगाम नगरे रूपम्। जगिमाचष्टे, जगिमाचष्टे "णिज् बहुल" ॥ ३।४।४२ ॥ इत्यादिना णिचि, "नामिनोऽकलिहले" ॥ ४।३।५१ ॥ इति वृद्धौ, "त्र्यन्त्यस्वरादे" ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे जगयतीति "क्विप्" ॥ ५।१।१४८॥ इति क्विपि, "अप्रयोगीत्" ॥ १।१।३७ ॥ इति तस्य लोपे, "णेरनिटि" ॥ ४।३।८३ ॥ इति णिलोपे च 'जग्' इति सिद्धम्, पुन जगिवाऽऽचरति "कर्तु क्विप्" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लोपे, "क्रियार्थो धातु" ॥३।३।३॥ इति धातुत्वे परोक्षायां आमवि, "कतयनद्भय शव्" ॥३।४।७१॥ इति शवि,"समानानां तेन दीर्घ" ॥ १।२।१ ॥ इति दीर्घत्वे जगाम इति रूप प्रासिद्धयत्। मा रिरेकाम इति। 'रेकृद् शङ्कु शङ्कायाम् माङ्पूर्वक रकमान प्रयुङ्क्ते प्रयोक्तृव्यापार णिगि अद्यतनी मप्रत्यये "णिश्रि" ॥३।४।५८॥ इत्यादिना ङे,"आद्योऽश एकस्वर" ॥४।१।२॥ इति द्वित्वे, "ह्रस्व" ॥ ४।१।३९ ॥ इति पूर्वस्य ह्रस्वत्वे, "णेरनिटि" ॥ ४।३।८३ ॥ इति णिग्लोपे, "मव्यस्या" ॥ ४।२।११३ ॥ इत्यकारस्याऽऽकारे "मा रिरेकाम इति सिद्धिमध्यास्त। एव मा मिमाम इति। 'अम

1 श्र , इति पाठ। 2 क्विप।

न्द्रम हम्म मिमृ गम्लृ गतौ' इत्यस्य, शेष पूर्ववत् । 'मील श्मील स्मील क्ष्मील निमेषणे' इत्यस्य णिगि अद्यतन्या ङप्रत्यये "भ्राजभास" ॥४।२।३६॥इत्यादिना उपान्त्यस्य विकल्पेन ह्रस्वत्वे मा मीमिले,मा मिमीले, इति रूपद्वन्द्व सिषेध । असीदाम इति । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य ह्यस्तन्या मे "श्रौति" ॥ ४।२।१०८ ॥ इत्यादिना सीदाऽऽदेशे,"मव्यस्या"॥४।२।११३॥ इत्याऽऽकारे,"अड् धातो"॥४।४। २९ ॥ इत्यादिनाऽडागमे च असीदामेति सिद्ध्यति स्म ॥ चिक्यात्, निन्यात्, इति । 'चिगृट् चयने' इत्यस्य 'णीग् प्रापणे' इत्यस्य च चेतु नतु वा इच्छतीति वाक्ये"तुमर्हाद्"॥३।४।२१॥इत्यादिना सनि,"स्वरहन्" ॥ ४।१।१०४ ॥ इत्यादिना दीर्घत्वे, "सन्यङश्च" ॥ ४।१।३ ॥ इति द्विवचने, ह्रस्वत्वे,"चे किवा" ॥४।१।३६॥ इति क्यादेशे चिकीषति, निनीषति इति वा "क्विप" ॥ ५।१।१४८ ॥ इति क्विपि, "अप्रयोगीत्" ॥ १।१।३७ ॥ इति तस्य लोपे, "अत" ॥ ४।३।८२ ॥ इत्यकारलोपे च तत चिकीष निनीषम्–आचष्टे "णिज् बहुल" ॥३।४।४२॥ इत्यादिना णिचि, "त्यन्त्यस्वरादे" ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे, आशी क्यात्प्रत्यये णिज्लोपे चिक्यात्, निन्यात् इति च सिद्धि प्राप्राजीत्, एव चिच्यात् । 'यद्वा डुकृग् करणे' इत्यस्य 'चिक्यात्' इति रूपम्, शष पूर्ववत् । अचकलाकत् इति । कलापूर्वस्य 'डुकृग् करणे' इत्यस्य कला करोतीति "क्विप्" ॥ ५।१।१४८ ॥ इति क्विपि तस्य लोपे, "ह्रस्वस्य त पित्कृति" ॥ ४।४।११३ ॥ इति तागमे, कलाकृतमाचष्टे णिजि, "त्यन्त्यस्वरादे" ॥ ७।४।४३ ॥ इत्यन्त्यस्वरादिलोपे, अद्यतनी दौ "णिश्रि"॥३।४।५८॥ इत्यादिना ङे, 'णेरनिटि" ॥४।३।८३॥ इति णिजलोपे "अन्यस्य" ॥४।१।८॥ इति द्विर्वचने, "कङश्चञ्" ॥४।१।४६॥ इति कस्य चे अडागमे च अचकलाकत् इति रूप प्रासाङ्गीत् । हृत्ता इति । 'हृग् हरणे' इत्यस्य हेतुत्वे ड आचारक्विपि श्वस्तनी ता "स्वार्थाग्नितोऽऽणादेरिट्"॥४।४।३२॥

इतीटि, "अत " ॥ ४।३।८२ ॥ इत्यकारलोपे च हरितेति रूप प्रत्यष्टान । वकीम । 'कुङ्क गतौ इत्यस्य विपूर्वको वर्तमाना मसि कुत्सितत्वविवक्षायाम्' अव्ययस्य को द् च"॥७।३।३०॥इति अन्त्यस्वराद् अकि, समानदीर्घत्वे, मस्य रुत्वे, रेफस्य विसर्गादेशे च वकीम इति रूप प्रादुरास। नकिरचाकाङ्क्षिष्ठा इति। 'कचुङ् श्वचुङ् इत्यादिदण्डकधातुर्निर्पूर्वक "उदित स्वरान्नोऽन्त ॥ ४।४।९८ ॥ इति नागमे, कुटिलत्वद्योतक "गत्यर्थात् कुटिले' ॥ ३।४।११ ॥ इति यङि, "सन्यङश्च" ॥ ४।१।३ ॥ इति द्विवचनेऽनादिव्यञ्जनलोपे, "कङश्चञ् ॥ ४।१। ४६ ॥ इति चत्वे, "आगुणावन्यादे ॥४।१।४८॥ इत्याऽऽकारे, अद्यतना थास्प्रत्यय सिचि इटि, 'अत ॥ ४।३।८२ ॥ इत्यकारलोपे, "योऽशिति ॥ ४।३।८० ॥ इति यलोप, नाम्यन्तस्था ॥२।३।१५॥ इत्यादिना सस्य षत्वे, 'तवगस्य' ॥ १।३।६० ॥ इत्यादिना थस्य ठत्वे पूर्ववद् अकि प्रत्यये नकिरचाकाङ्क्षिष्ठा इति सिद्धिमधात् । नकिरटाटङ्क्षिष्ठा',टकुङ् एव टक इत्यस्य प्रायेण अनित्यणिजश्चुरादय 'इति घुपृणिशब्द तत इत्यस्य ज्ञापयामास इति, शप पूर्ववत्।'हन्ङ् हिंसागत्यो इत्यस्य आङ्पूर्वस्य 'आङो यमहन ' ॥ ३।३।८६ ॥ इत्यात्मनेपदत्वे ततोऽद्यतन्याम्–इप्रत्यये सिचि इन सिच ॥४।३।३८॥ इति किद्वद्भावे, 'यमिरमि ॥४।२।५५॥ इत्यादिना नलोपेऽडागमे समानदीर्घत्वे च आहसि इति रूप सिद्धिमगान् । 'ओलजैङ् ओलस्जैति श्राडे' इत्यत्र आगुस्य स्थान केचिद् ओनजैङ् इत्युच्यति, तन्मतमाश्रित्य प्रयोग साध्यते– नजते इति, "अच्" ॥ ५।१।४९ ॥ इत्यचि, नज इवाऽऽचरति "कर्तु क्विप्" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लोपे वर्तमानातिवि शवि,"लुगस्यादेत्यपदे ॥२।१।११३॥ इत्यलोपे नजति इति प्रयोग सिद्धि नेय । दण्टमिन्छति इति अमाव्ययात् क्यन् च ' ॥ ३।४।२३ ॥ इति "क्यनि' ॥ ४।३।११२ ॥ इत्यकारस्येकारे दण्टीयति इति क्विपि

---

१ घुपृण निशब्द अत्र ज्ञाप्लकरण पूर्वोपन्यस्तस्य न्यायस्य ज्ञापकमिति तत्त्वम् । २ इच्छन्ति । ३ क्यनि इति शेष ।

तस्य लोपे, "अत" ॥४।३।८२॥ इत्यलोपे,"य्वो प्वय्व्यञ्जने लुक्" ॥ ४।४।१२१ ॥ इति यलुकि, प्रथमैकवचने तस्य रत्वे रेफस्य विसर्गादेशे च टण्टीः, इति रूपं समसिधत्। अजिह्वायकद् इति। 'अयिवयि' इत्यादिकदण्डकधातु जिह्वाशब्दस्य प्रागवस्थानम्, अयते इति "णकतृचौ" ॥ ५।१।४८ ॥ इति णके, उपान्त्यवृद्धौ, जिह्वाया आयकः जिह्वायकः इवाऽऽचरति "कर्तुः क्विप्" ॥३।४।२५॥ इत्यादिना क्विपि तस्य लुपि "क्रियार्थो धातुः ॥३।३।३॥ इति धातुत्वे ह्यस्तन्या दिवि, "लुगस्यादेत्यपदे ॥ २।१।११३ ॥ इत्यलोपेऽडागमे अजिह्वायकद् इति रूपं समसैरसीत्॥ १ ॥

अग्निभ्य पार्थिवेभ्यश्च प्रथमान्तं पदद्वयम् ।
एपेति नैतदाद्यन्तं श्वानस्येति च साधुता ॥ २ ॥

चतुर्थी पञ्चम्योर्बहुवचने न सन्देहः, प्रथमान्तं सन्दिग्धमिति तु साध्यते- अग्निभ्य इति। 'भ्यसि भये' भ्यसते इति क्विपि, तस्य लोपे "पञ्चमी भयाद्यैः" ॥३।१।७३॥ इति अग्निशब्देन सह अग्नेर्भ्यं अग्निभ्य इति तत्पुरुषे कृते, "अधातुविभक्ति" ॥ १।१।२७ ॥ इत्यादिना नामत्वे, "नाम्न प्रथमैकद्विबहौ" ॥ २।२। ३१ ॥ इति प्रथमैकवचने, "दीर्घङ्याब्व्यञ्जनात्से" ॥ १।४।४५ ॥ इति सेर्लोपे, "सो रुः" ॥ २।१।७२ ॥ इति सकारस्य रत्वे, "र पदान्ते विसर्गस्तयो" ॥ १।३।५३ ॥ इति विसर्गादेशे च सति अग्निभ्य इति रूपं निरवीभृतत्, अथवा 'ञिभीक् भये' अग्नेर्बिभेति इति विग्रहे क्विपि तस्य लोपे, अग्निशब्देन "ङस्युक्तं कृता" ॥ ३।१।४९ ॥ इति तत्पुरुषे तथा प्रथमाबहुवचने,"क्विब्वृत्तेरसुधियस्तौ"॥२।१।४ ॥ इति यत्वे, अनेनाऽपि प्रकारेण अग्निभ्य इति रूपमसिधत्। तथा पार्थिवेभ्य इति। पृथिव्या विकारः "विकारे" ॥६।२।३०॥ इत्यण्, "वृद्धिः स्वरेष्वादे" ॥ ७।४।१ ॥ इत्यादिना आदिस्वरस्य वृद्धिः,

---

१ सिप्रत्ययस्य।

"अवर्णवर्णस्य" ॥ ७।४।६८ ॥ इति इकारलोपे, तत पार्थिवस्य इभ्य इति "षष्ठ्ययत्नाच्छेषे" ॥ ३।१।७६ ॥ इति षष्ठीतत्पुरुषे, प्रथमाया एकवचने तस्य रुत्वे विसर्गे, "अवर्णस्येवर्णादिना" ॥ १।२।६ ॥ एत्वे च सिद्ध पार्थिवेभ्य इति, यद्वा पृथिव्या इश पार्थिव, "पृथिवीसर्वभूमे" ॥ ६।४।१५६ ॥ इत्यादिना अञि शेष पूर्ववत्। तथा एपा इति। 'जेपृङ् णेपृङ् एपृङ् ह्रेपृङ् गतौ' इत्यस्य एपनम्–एप्, "क्रुत्संपदादिभ्य , ॥ ५।३।११४ ॥ इति क्विपि तस्य लोपे, तृतीयैकवचनम्, एपेति समसीत्सीत्। श्वानस्येति च साधुता। नासिकार्थे हितम् "प्राण्यङ्गरथखलतिलयवबृषब्रह्ममाषाद् य" ॥ ७।१।३७॥ इति य, तत्र भवम् "दिगादिदेहांशाद् य" ॥६।३। १२४ ॥ इति ये, "नस् नासिकाया तक्षुद्रे" ॥ ३।२।९९ ॥ इत्यधिकारे "येऽवर्णे" ॥ ३।२।१०० ॥ इति नासिकाशब्दस्य नसा देशे, न नस्य विद्यते अस्य इति अनस्य, श्वा इव श्वा चासौ अनस्यश्च "उपमान सामान्यै ॥ ३।१।१०१ ॥ इति समासे, तत आमन्त्र्ये सौ "अदेत स्यमोर्लुक्" ॥ १।४।४४ ॥ इति च तस्य लोपे च श्वानस्य इति च सिद्धम्,

भवेतामिति शब्दोऽयं बहुत्वे वर्तते कथम् ? ।
यागे षष्ठीसमास स्यात् पञ्चमी परंताद् न तु ॥ ३ ॥

भवेतामिति, 'भू सत्तायाम्' सप्तमीयाता–प्रत्यय, "कर्तर्यनद्भ्य शव्" ॥ ३ । ४ । ७१ ॥ इति शव्–प्रत्यये, "नामिनो गुणोऽक्ङिति" ॥४।३।१॥ इति गुण, "ओदौतोऽवाव्" ॥१।२।२४॥ इति अवादेश, "य सप्तम्या" ॥४।२।१२२॥ इति याशब्द इकार, "अवर्णस्येवर्णादिना" ॥ १ ।२ । ६ ॥ इति अकारस्य इकारेण सह एकार, इत्थ द्विवचनान्त, बहुवचनान्त इति सदेह, तत्रान्यते– भव ससार 'इणक् गतौ' इत्यस्य यन्ति इति "क्विप्" ॥५।१। १४८॥ इति क्विपि तस्य लोपे "ह्रस्वस्य त पित्कृति" ॥४।४।११३॥

इति ताऽऽगमे भवम्य इतो भवेत, इति पष्ठीतत्पुरुषे कृते तेपा भवेताम्, षष्ठीबहुवचने सिद्ध भवेतामिति । अत्राऽपि कथमिति योज्यम् । यागः षष्ठीसमासः स्याद् इति । अ विष्णु, अस्य अपत्यम् इ काम, "अत इञ्" ॥४।१।९५॥ इति इञि, "वृद्धि स्वरेषु" ॥ ७ । ४ । १ ॥ इत्यादिना अकारस्य वृद्धौ "अवर्णवर्णस्य" ॥७।४।६८॥ इति प्रकृत्याऽऽकारलोपे प्रत्ययमात्र प्रकृति, तत पष्ठ्येकवचन तस्य आग इति विग्रहे प्रथमैकवचने "अनतो लुप्" ॥ १।४।५९ ॥ इति सिलोपे, सकारस्य रत्वे, विसर्गादेशे च सति याग इति पद सिद्धम्, यद्वा ईर्लक्ष्मीस्तस्या आग अपराध, इति द्वैतीयकेन प्रकारेण निरवर्तत यद्वा या लक्ष्मी याया अग पर्वत पादपो वा, इत्थ तार्तीयिकेनाऽपि प्रकारेण याग इति पद निष्पेदे, शेष पूर्ववत् । पञ्चमी पर्वताद् न तु इति । पञ्चम्यन्तस्साधन सुगम अपञ्चम्यन्ते तु संदेहस्तत्र क्रम -'पूर्व पर्व मर्व पूरणे' 'पर्व' इति, धातु भ्वादौ परस्मैपदी, तस्मात् पञ्चम्या परस्मैपदप्रथमनिकस्य एकवचन तुव्, "कर्तय" ॥ ३।४।७१ ॥ शव्प्रत्यय, "आशिषि तुह्योस्तातङ्" ॥४।२।११९॥ इति तातङ् आदेशे सिद्ध पर्वताद्, इति अथवा 'अद प्साए भक्षण' इत्यस्य पर्वतदन्दस्य प्राग् निक्षेप, पर्वतमत्तीति वाक्ये "अदोऽनन्नात्" ॥ ५।१।१५० ॥ इति क्विपि तस्य लोपे, "अधातुविभक्ति" ॥ १।१।२७ ॥ इत्यादिना नामत्वे, "नाम्न प्रथमैक" ॥२।२।३१॥ इत्यादिना प्रथमाया एकवचने "दीर्घङ्यान्" ॥१।४।४५ ॥ इत्यादिना तस्य लोपे, "विरामे वा" ॥ १।३।५१ ॥ इति दस्य ते, अनेनाऽपि प्रकारेण सिद्ध पर्वताद् इति, अमुना प्रकारेण वृक्षात्, घटाद् इत्यादयोऽपि ऊह्या ॥ ३ ॥

पञ्चङ्ढलानि साधुत्व कथ याति च लक्षणात् ।
मुनीनामिति नो षष्ठी त्याद्यन्त चाऽथ-यित्यपि ?॥४॥

रञ्चन् पप् व्यवस्थापिते पञ्च वा पङ

या इति विग्रहे "प्रमाणीसंख्याड्डः" ॥ ७।३।१२८ ॥ इति समासान्ते "डित्यन्त्यस्वरादेः" ॥ २।१।११४ ॥ लोप, पञ्चपान् आचष्टे इति वाक्ये "णिज् बहुलं" ॥ ३।४।४२ ॥ णिच्प्रत्यये, "त्यन्त्यस्वरादेः" ॥ ७।४।४३ ॥ इति अन्त्यस्वरादिलोपे पञ्चयति इति क्विपि, "अप्रयोगीत्" ॥ १।१।३७ ॥ तस्य लोपे "णेरनिटि" ॥ ४।३।८३ ॥ इति णिजो लोपे पञ्चया इत्यानि पञ्चीसमासे पञ्चहृल्लानि इति सिद्धम् । मुनिभिनों यस्या सा तथा ता पश्य इति मुनीनाम् इति पद सिद्धिमगात् । स्यायन्त चास्थ यित्यपि । 'द्वयोश्चि गतिप्रवृत्या अप्तनीसि, "अर्दिन्द्र" ॥ ३ । ४ । ६५ ॥ इत्यादिना अहि, "अड् धातो" ॥ ४ । ४ । २९ ॥ अडागम, "श्यशसमूष" ॥ ४ । ३ । १०३ ॥ इत्यादिना आदेशे, "सोरु" ॥ २ । १ । ७२ ॥ इति सस्य रुत्वे "र पदान्ते" ॥ १ । ३ । ५३ ॥ इत्यादिना विसर्गादेशे च शाति अथ इति रूप सिद्धिमैयत ॥ ८ ॥

**अष्टाविति कथ द्विरत्र राजेभ्य इति साधुता ।**
**तेनेस्तेतत् साधन्त स्यादसाधन्त भवेदिति ? ॥५॥**

अष्टाविति कथ द्विरत्र राजेभ्य इति साधुता । अष्टौ इति अष्टनो जसि शसि वा सुबोधम्, द्विवचनान्त तु संदेहस्तत्र उच्यते- 'अशौटि व्याप्तौ' इत्यस्य अश्यत इति वाक्ये "शाने ष्टाऽचार्थे" ॥ ५ । २ । ९२ ॥ च, शस्य षत्व, "तवर्गस्य श्चवर्ग" ॥ १ । ३ । ६० ॥ इत्यादिना तस्य टत्वे, प्रथमा द्वितीया द्विवचने "ऐदौत् सन्ध्यक्षरै" ॥ १ । २ । १२ ॥ इति अकारस्य औकारेण सह औकार च अष्टौ इति रूप सिद्धिमायात् । राजेभ्य इति साधुता । राजन् शब्दाद् भ्यसि "नाम सिदय" ॥१।१।२१॥ इति पदत्वे, "नाम्नो नो" ॥२।१।९१॥ नलोपे स्यादिविधौ विधातव्ये नकारस्य सत्त्व "एद् बहुस्भोसि" ॥१।४।४॥ इत्यनेन एत्व न भवेत्, अकारान्तत्वाऽभावाद् एत्वाऽभावे राजभ्य इत्येव भवति,

इद तु कथमिति ? । अत्र उच्यते– राज्ञाभिभ्यो राजभ्य इति विगृह्य प्रथमाया एकवचने राजेभ्य इति सिद्धिमायासीत । तेन इत्येतत् पद त्याद्यन्त स्यादिति । तद् तृतीयैकवचने सुगममेव, त्याद्यन्त तु 'तनूयी विस्तारे' परोक्षा-अ "अनादेशादरेक" ॥४।१।१४॥ इत्यादिना उपान्त्यस्य अकारस्य एत्वे, द्वित्वाऽभावे च तेन इति निरापाद्यते, अत्याद्यन्त भवेदिति । भव समार, तमेति 'इण् गतौ' इत्यस्य क्विपि "ह्रस्वस्य त पित्कृति" ॥४।४।११३॥ इति तागमे "अप्रयोगीत्" ॥ १।१।३७ ॥ इति तस्य लुपि "दीर्घङ्याब्" ॥ १।४।४५ ॥ सिलोपे "अवर्णस्य" ॥ १।२।६ ॥ इति एत्वे सिद्ध भवेदिति । वृक्ष शब्द सप्तम्येकवचनान्त, 'अण रण' इत्यादिधातु, पञ्चम्या ङौ शवि 'अत प्रत्ययात्" ॥ ४।२।८५ ॥ हेर्लुकि, "एदोत " ॥ १।२।२७ ॥ अणाऽकारलोपे सिद्ध वृक्षेऽण इति । अनया दिशा अन्यदपि ऊह्यम्, अन्यदपि एवजातीय प्रस्तावाद् ब्रूम – असद पष्ठ्येकवचने "तव मम ङसा" ॥ २।१।१५ ॥ इति ङसा सह सुगममेव, त्याद्यन्त तु कथम् ?, तद् दर्शयाम – 'माङ् माने' परोक्षा अप्रत्यय "द्विर्धातु" ॥ ४।१।१ ॥ द्वित्वे ह्रस्वे मूलधातो "इडेत्पुसि" ॥ ४।३।९४ ॥ आलोपे ममे इति निर्वृते ॥ ५ ॥

यूथानि गूथानि घृतानि रात्रीः
क्षीराणि वृत्तानि दिवान्यजागाः ।
सुखानि शूराणि तृणान्यदानि
स्थूलानि सूत्राणि दृढान्यराराः ॥ ६ ॥

तवैतानि एकवचनानि एवम्–यूथानि इति 'अन् प्राणने' इत्यस्य यूथशब्दस्य प्राग् निक्षेप, यूथमत्ति इत्येव शील यस्य तत्स्य - मिति वाक्ये "अजाते शील" ॥ ५।१।१५४ ॥ इति णिन्प्रत्यये

१ तद्-शब्दस्य ।
२

"क्ष्णति" ॥ ४।३।५० ॥ इत्यनेन उपान्त्याऽकारस्य वृद्धौ प्रथमैक वचने "अनतो लुप्" ॥ १।४।५९ ॥ इति तस्य लुपि, 'नाम्नो नोऽनह्न" ॥ २।१।९७ ॥ इति नकारलोपे "समानानां तेन दीर्घ" ॥ १।२।१ ॥ इति पूर्वस्याऽकारस्य अकारेण सह दीर्घत्व च सिद्ध यूथानि इति । एव यूथानि, घृतानि इति । रात्रीरिति रात्रिमिच्छति इति वाक्ये "अमाऽव्ययात् क्यन् च" ॥ ३।४।२३ ॥ क्यन् प्रत्यय , "दीर्घश्च्वि　॥ ४।३।१०८ ॥ इ दीर्घत्वे, रात्रीयति इति क्विपि, "अत" ॥४।३।८२॥ इति अलोपे "य्वो प्वय् व्यञ्जने" ॥४।४।१२१॥ यलुकि सिद्ध रात्री, इति । क्षीराणि 'अण्राणित्यादि अण', क्षीरमणति इत्येव शील यत्कुलमिति वाक्य, शेष यूथानिवत् । तथा वृत्तानि, दिवानि, सुखानि, शूराणि, तृणानि, स्थूलानि, सूत्राणि, दृढानि इत्येतानि सिद्धिमगु । अदानि तु अस्ते पञ्चम्या आ निपि सिध्यति । अजागा 'कैंगै शब्दे' 'गाङ् गतौ' इत्यस्य वा अत्यर्थ गायति गावे वा यङि, तल्लुपि "सन्यङश्च" ॥ ४।१।३ ॥ इति द्वित्व "ह्रस्व" ॥ १।१।२९ ॥ इति ह्रस्वे, "गहोर्ज" ॥ ४।१।४० ॥ जत्वे, "आगुणा" ॥ ४।१।४८॥ आकारे, ह्यस्तन्या सिपि, "अड् धाता" ॥४।४।२९॥ अडागमे, "सो रु ॥२।१।७२॥ सस्य रुत्वे, "र पदान्ते" ॥१।३।५३॥ इति विसर्गे अजागा इति सिद्धिमधात । अरारा इति 'राक् आदाने' इत्यस्य, शेष पूर्ववत् ॥ ६ ॥

हस्तौ द्विवचन नेद शोभनेष्वित्यमसमी ।
क्षीरस्येति न षष्ठीय त्याद्यन्त्य वायुरित्यपि ॥ ७ ॥

हसे हसने इत्यस्य हस्यादिति वाक्ये "तिक्कृतौ नाम्नि" ॥ ५।१।७१ ॥ इति तिक्प्रत्यये "डित्यो" ॥ १।४।२५ ॥ इति डैर्डावादेशे डित्यन्त्यस्वरादिलोपे च सिद्ध हस्तानिति । शोभनेष्वित्यसप्तमी शोभना इषवो यस्य धनुष्मतन् शोभनेषु सशरमित्यर्थ , तत "अनतो लुप्" ॥ १।४।५९ ॥ मिल्लोपे सिद्ध शोभनेष्विति ।

क्षीरस्येति न पष्ठीयमिति क्षीरमिच्छतीति, "अमाऽव्ययात्" ॥२।४।२३॥ क्यनि, "अश्व लौल्ये" ॥ ४।३।११५ ॥ इति क्यन्प्रत्ययस्य सकारागमे "क्रियार्थो धातु" ॥३।३।३ ॥ इति धातुत्वे पञ्चम्या ही शवि, "लुगस्या-" ॥ ३।१।११३ ॥ अलोपे "अत प्रत्ययाल्लुक्" ॥ ४।३।८५ ॥ हलोपे च क्षीरस्य इति रूप प्रतिष्ठामाप ॥ स्यान्त वायुरित्यपि 'वाकृ गतिगन्धनयो' इत्यस्य सप्तम्या युमि, "मा र ॥ ३।१।७३ ॥ इति रुत्वे "र पदा-" ॥ १।३।५३ ॥ विसर्गादेशे च सिद्ध वायुरिति ॥ ७ ॥

दधिस्येति कथ साधु मधुस्येति तथा परम् ।
केनेत्सेतदन्त स्यादपापा इत्यसुस्तथा[1] ॥ ८ ॥

दधीच्छतीति, मध्विच्छतीति वाक्ये शेष क्षीरस्येतिवत्, "अश्व लौल्ये" ॥४।३।११५॥ इति च प्रत्ययद्वन्द्व विधीयते, यदा अम् तदा "इवर्णादे" ॥ १।३।२९ ॥ इत्यादिना यत्वे च द्ध्यस्य, मध्वस्य इति सिद्धम्, अत्रापि शेष पूर्ववत्, अथवा 'धोंच् अन्तकर्मणि' इत्यस्य दधिशब्दस्य प्रारूपे पञ्चम्या ही "दिवादे श्य" ॥ ३।४।७ ॥ इति श्ये "ओत श्ये" ॥ ४।३।१०३ ॥ इत्योकारलोपे "अत प्रत्य-" ॥ ४।३।८५ ॥ हलोपे च सिद्ध दधिस्य, मधुस्य इति, यद्वापरमपि पूर्ववत् सिद्धम् । केनेत्सेतदन्तम् कथमिति तस्य इन केन, आमन्त्रणे सौ "अंदेत स्य" ॥ २।४।४४ ॥ सेलुकि च सिद्ध केनेति । अपापा इत्यसुस्तथा इति न विद्यते पाप येषा ते अपापा इति सुगममेव, प्रकारान्तरेणोच्यते— पर्दि कुरिसते शब्दे इत्यस्य अत्यर्थ पर्देत इति "व्यञ्जनादे-" ॥३।२।९॥ इत्यादिना यङि, "सन्यङश्च" ॥ ४।१।३ ॥ इति द्वित्वे, "व्यञ्जनस्या-नादेर्लुक्" ॥४।१।४४॥ इत्यन्तस्य अलोपे "आगुणा ॥४।१।४८॥ आ पादे शमन्या सिवि, "अद् धा-" ॥ ४।४।२९ ॥ अपाप- "न स्वा च क" ॥४।३।७९॥ इति सिवो लुकि ज्य कत्व च ...

---
[1] अस्मादिरवन ।

लुग् दी–' ॥१।३।४०॥ रलोपे पूर्वस्य रस्य दीर्घत्वे रस्य विसर्गादेशे सति अपाः इति प्रसिद्धिमाप ॥ एवं गृधे, स्पर्धे, 'दंश' यङ्लुपि द्वित्वे "रिरौ च लुपि" ॥४।१।५६॥ इति रागमे "आगुणा– ॥४।१।४८॥ दीर्घत्वे ह्यस्तन्या सिपि 'गडदबादे–' ॥ २।१।७७ ॥ आदेश्चतुर्थत्वे "लघोरुपा–' ॥ ४।३।४ ॥ गुणे, "से स्सेधां च रुवा' ॥ ४।३।७९ ॥ इति सिचो लुपि धकारस्य रुत्वेऽवशेष पूर्ववत् अजर्धाः, अनानाः, अपास्पाः, इति रूपाणि सिद्धिमस्कान्तु, एवमन्यान्यपि रूपाणि ज्ञेयानि ॥ ८ ॥

एतेषां कथमेकस्त्र वनानि ब्राह्मणेऽमी ।
वृक्षा पचन्ति येषां यान् वायुभ्य पार्थिवाः सुरा. " ॥ ९ ॥

'वन षण सम्भक्तौ' पञ्चम्या आमिति शासि समानाना–' ॥ १।४।१ ॥ दीर्घत्वे वनानीति सिद्धम् । ब्राह्मणैरिति 'इण्क् गतौ' इत्यस्य ह्यस्तन्या सिपि 'स्वरादेस्तासु–' ॥ ४।४।३१ ॥ इति वृद्धौ सो रुत्वे विसर्गादेशे सति तत आमन्त्र्याऽथ अत्राण' गतोऽसीत्यर्थः । अमी इति 'अमद्रम अमनमम इति वाक्ये "भावाकर्त्रो" ॥ ५।३।१८ ॥ इति घञि 'अमोऽस्य–" ॥ ४।२।२६ ॥ वृद्धिप्रति षेधे अमोऽस्यामीति विग्रहे "अतोऽनेकस्वरा– ॥ ७।२।६ ॥ इत्यानि "नाम्न –' ॥ ७।३।१२ ॥ इत्यादिना प्रथमैकवचने "दीर्घङ्याब्–" ॥ १।४।४५ ॥ इत्यादिना तस्य लोपे "इनहन्–" ॥ ३।४।८७ ॥ इत्यादिना उपान्त्याकारस्य दीर्घत्वं "नाम्नो नोऽनह्नः ॥ २।१।९१ ॥ इति नकारस्य लोपे अमीति सिद्धम् ॥ वृक्षाः 'इति असूच् क्षपणे' इत्यस्य असतीति वाक्ये क्विपि तस्य लोपे "अधातुविभक्ति–" ॥ १।१।२७ ॥ इत्यादिना नामत्वे "नाम्न – ॥ २।१।९१ ॥ इत्यादिना प्रथमैकत्वे "सो रु' ॥ २।१।७२ ॥ सकारस्य रुत्वं विसर्गादेशे च ततो वृक्षशब्दस्य आमन्त्र्यार्थस्य तस्य अ "समानानाम् ॥ १।४।१ ॥ इति दीर्घत्वं च वृक्षा इति सिद्धम् । पचन्ति इति 'डुपचींष् पाके'

इत्यस्य पचतीति वाक्ये "शत्रानशावेष्यति तु सस्यौ" ॥५।२।२०॥ इति शत्रप्रत्यये, शवि, "लुगम्यादेत्यपदे" ॥ ३।१।११३ ॥ इत्यलोपे, "अधातुदुदित" ॥२।४।३॥ इति ङीप्रत्यये, "श्यशव" ॥२।१।११६॥ इति नागमे, आमन्त्र्ये सौ, "नित्यदिद्द्विस्वराऽम्बार्थस्य ह्रस्व" ॥ १।४।४३ ॥ इति सिना सह ह्रस्वत्वे पचन्तीति सिद्धम्। येषाम् इति 'येपृङ् प्रयत्ने' येष्यते इति "क्तेटो गुरोर्व्यञ्जनात्" ॥ ५।३। १०६ ॥ इत्यप्रत्यय, "आत्" ॥ २।४।१८ ॥ इति आप्, षष्ठी बहुत्वे द्वितीयैकवचनम्, "समानादमोऽत" ॥ १।४।४६ ॥ इत्यमो ऽकारस्य लुक्, येषाम्, इति सिद्धम्। पद्यपन्तं तु सुगममेव। यान् इति 'यान् प्रापणे' यातीति वाक्ये शतृप्रत्यय, प्रथमैकवचनम्, "ऋदुदित" ॥ १।४।७० ॥ इति नागम, "दीर्घङ्याब्–" ॥ १।४।४५ ॥ इत्यादिना सेर्लुक् "पदस्य" ॥ २।१।८९ ॥ इति तलोप यान् इति, सिद्धम्। वायुभ्य' यथा अग्निभ्य। पार्थिवमस्तीति क्विपि तस्य लोपे, समानदीर्घत्वे, प्रथमैकत्वम्, "दीर्घङ्या–" ॥१।४।४५॥ इत्यादिना तस्य लोपे, "सो रु" ॥ २।१।७२ ॥ इति सकारस्य रुत्वे विसर्गादेशे च पार्थिवाः इति। सुरा॰ इति 'षुञ् अभिषवे' सुराशब्दस्य प्रागवस्थानम्, "प सोऽष्ट्यैष्ठिवष्वष्क" ॥२।३।९८॥ इति षस्य स, सुरा सुनोति इति क्विप् तस्य लुक्, "ह्रस्वस्य त पित्कृति" ॥४।४।११३॥ इति तागम, सुरासुतमाचष्टे "णिज् बहुलम्"– ॥ ३।४।४२ ॥ इत्यादिना णिच्प्रत्यय, "त्र्यन्त्यस्वरादे" ॥७।४।४३॥ अन्त्यस्वरलोपे सुरासयतीति क्विप्, "णेरनिटि" ॥४।३।८३॥ इति णेर्लोपे, क्विब्लोपे, नामत्वे, प्रथमैकवचने, "दीर्घङ्याब्" ॥१।४।४५॥ इत्यादिना तस्य लोपे, "सो रु" ॥२।१।७२॥ इति सस्य लोपे, रुत्वे विसर्गादेशे च सुरा इति सिद्धम् ॥९॥

शेषाणि पूर्वाणि समान्यजाना

फलानि मूलानि हलान्यगूनाम्।

अभ्राणि नीलानि दलान्यतस्य-
शूलानि कूलानि तटान्यपापाः ॥ १० ॥

पूर्वेऽस्मिन् इह वक्ष्यमाणे च श्लोके प्रथमा द्वितीयादिबहुवचनान्तप्रतिरूपकाणि एकवचनान्तानि कथं भवन्ति ?, यदत्र ब्रूम - 'वप शिपेति शिप' पञ्चम्या आशिषि, शपि, "स्याद्युपान्त्यस्य" ॥४।३।४॥ इति गुणे, समानदीर्घत्वे "रपृवर्णा" ॥२।३।६३॥ इत्यादिना णत्वे, शेपाणि इति सिद्धम्। पूर्वाणि समानि इति 'पूर्व पर्व मर्व पूरणे' 'षम ष्टम वैक्लव्ये' भ्वादौ परस्मैपदिनौ, "ष सोऽष्ट्यै" ॥२।३।९८॥ इत्यादिना षस्य स शेष पूर्ववत्। अजानाम् इति 'ज्ञाृ अवबोधने' ह्यस्तन्या अम्, "क्र्यादेः" ॥३।४।७९॥ श्नाप्रत्यय "जा ज्ञाजनोऽत्यादौ" ॥४।२।१०४॥ इति जादेश, अडागम, समानदीर्घत्वम्, अजानामिति सिद्धम्। फलानि, मूलानि, हलानि इति 'फल निष्पत्तौ' 'मूल प्रतिष्ठायाम्', 'हल विलेखने' शेष पूर्वाणिवत्। अगूनाम् इति नञ्पूर्वस्य गोशब्दस्य न विद्यते गौर्यषां ते अगवस्तेषामगूनाम्, "गोश्चान्ते" ॥२।४।९६॥ इत्यादिना ह्रस्वत्वे षष्ठ्या आम् "ह्रस्वापश्च" ॥१।४।३२॥ इत्यामो नामि, "दीर्घो नामि-" ॥१।४।४७॥ इत्यादिना, दीर्घत्वम्, इत्थं बहुवचनान्त सिध्यति, द्विवचनान्तस्तु 'गुन् पुरीषोत्सर्गे' गुवति स्म इति, "गत्यर्थाऽकर्मक" ॥५।१।११॥ इत्यादिना कर्तरि क्ते "दुगोरू च ॥४।२।७७॥ इति क्तकारस्य नत्वे, धातोरूकारे च ततो नञ्समासे स्त्रियामपि, इत्थमेकवचनान्तं सिद्धम्। अभ्राणि, नीलानि, दलानि इति 'अभ्र वभ्र मभ्र गतौ', 'नील वर्णे', 'दल त्रिफला विशरणे', पञ्चम्यादि शेष पूर्ववत् ॥ अतस्य, इति अतसीशब्दस्य प्रथमाबहुवचनान्तस्य, आशङ्का इह त्वेकवचनान्तं मायां, 'तसू दसूच् क्षये' ह्यस्तन्या सिव् "दिवादेः श्य" ॥३।४।७२॥ इति श्यप्रत्यय, अडागमे, "सो रु" ॥२।१।७२॥ इति सस्य रुत्वे, विसर्गादेशे च अतस्य इति सिद्धम्।

शूलानि, कूलानि, तटानि इति 'शूल रुजायाम्', 'कूल आवरणे', 'तट समुच्छ्राये', आनिवादि पूर्ववत् । अपापा इति यड्लुगन्त पूर्ववत् ॥ १० ॥

सुखानि शीलानि नसान्यसास्ना·
खलानि पापानि बलान्यचर्चा· ।
पुराणि वर्पाणि मठान्यमीना
घनानि सर्वाणि बिलान्यपा च ॥ ११ ॥

कथमेकत्वमिति वर्त्तते ?, सुखानि इति सुख दु खण् तत्क्रियायाम्' इत्यस्य "चुरादिभ्यो णिच्" ॥३।४।१७॥ "अत " ॥४।३।८२॥ इत्यकारलोपे सुखयतीति वाक्ये अपि, "णेरनिटि" ॥४।३।८३॥ इति णिलुकि, सुखमिवाचरतीति वाक्ये, "कर्तु क्विप्-" ॥३।४।२५॥ इति क्विप्, तस्य लोपे, "क्रियार्थो धातु " ॥३।३।३॥ इति धातुत्वे पञ्चम्या आनिमि, शवि, समानदीर्घत्वे च सुखानि इति सिद्धम्, अथवा शोभना खानयो यत्र कुले इति विग्रहे प्रथमैकवचने, 'अनतो लुप्" ॥१।४।५९॥ इति तस्य लोपे, यद्वा सुखमानयति यत्कुल क्विपि तस्य लोपे, "क्लीबे" ॥२।४।९७॥ इति ह्रस्वे इति शेष पूर्ववत् , एव प्रकारत्रयेण सुखानि इति सिद्धम् चतुर्थस्तु सुखेन अनिति इत्येव शीलमिति पूर्वोक्तमेव । शीलानि, नखानि 'इति शील समाधौ', उत्व नख इत्यादिना गत्यर्थो नख धातु , आनिवादि पूर्ववत् । असास्ना' इति न विद्यते सास्ना गलकम्बलो येषा ते तथा प्रथमा, इति बहुवचने सिद्ध्यति, इह तु प्रकृत तदुच्यते 'ष्णा शौचे' "प सोऽष्ट्यै ॥२।३।९८॥ इत्यादिना षकारस्य सकार , 'निमित्ताभावे नैमित्तिकस्याप्यभाव ', इति णकारस्य नकार , अत्यर्थं स्नाति इति "व्यञ्जनादे-" ॥३।४।९॥ इत्यादिना यङि, तस्य लुपि, "सन्यङश्च" ॥४।१।३॥ इति द्वित्वे, "व्यञ्जनस्यानादेर्लुक्" ॥४।१।४४॥ इति लुकि,

ह्रस्व" ॥४।१।३९॥ इति पूर्वस्य ह्रस्वत्वे, "आगुणावन्यादेः" ॥४।१।४८॥ इति अकारस्याकारे सराजनी सिव्, "अड् धातोरादि" ॥४।४।२९॥ इत्यडागमे सो रे, रेफस्य विसर्गे च असास्त्राः इति सिद्धम् ॥ रसलानि इति 'रसल संचय पञ्चम्यन्त । 'पा पाने' 'पाक् रक्षणे' च यङ्लुबन्त, पञ्चम्या आनिवि समानदीर्घत्वे च पापानि इति सिद्धम् । 'घल प्राणने' आनिधि रलानि । अचर्चाः इति 'चर्चण् अध्ययने' चचन चर्चा "भीषिभूषि" ॥५।३।१०९॥ इत्यादिनाऽङि, "आत्" ॥२।४।१८॥ इत्यापि, समानदीर्घत्वे, न विद्यते चर्चा पाठविशेषो येषां ते तथा इति प्रथमाबहुवचनान्तम्, इह त्वेकवचनान्तम् तत् कथम्?, इत्युच्यते चर्चा इवाचरति "कर्तुः क्विप्" ॥३।४।२५॥ इति क्विपि, तस्य लोपे "क्रियार्थो धातुः" ॥३।३।३॥ इति धातुत्वे, ह्यस्तन्या सिवि, अडागमे, शवि, समानदीर्घत्वे, सस्य रुत्वे, विसर्गादेशे च सति अचर्चाः इति सिद्धम् । पुराणि, वर्पाणि, मठानि इति 'पुरत् अग्रगमने पञ्चम्या आनिवि, "तुदादेः शः" ॥३।४।८१॥ इति शे समानदीर्घत्वे, "रपृवर्णा" ॥२।३।६३॥ इत्यादिना णत्वे पुराणि इति सिद्धम् । 'जिपू विपू मिपू निपू वृपू वृपू सेचने' आनिवि, शवि "लघोरुपान्त्यस्य" ॥४।३।४॥ इति गुणे शेष पूर्ववत् वर्पाणि इति सिद्धम् । मठानि इति 'मठ मद निवासयोश्च' इति शेष पूर्ववत् । अमीनाः इति न विद्यन्ते मीना येषु तडागेषु ते अमीनाः इति बहुवचनान्तम्, एकत्व तु प्रकृतम्, तत् कथ्यते-'मींगृश् हिंसायाम्,' ह्यस्तन्या सिवि "क्र्यादेः" ॥३।४।७९॥ इति श्नाप्रत्ययेऽडागमे सस्य रुत्वे विसर्गादेशे च सिद्धममीना इति । घनानि इति घन इवाचरति कर्तुः क्विपि तस्य लोप, क्रियार्थो धातुत्वे, पञ्चम्या आनिवि शवि समानदीर्घत्वे च घनानि इति सिद्धम् । सर्वाणि घनानिवत् । 'भिल्न् भेदने' आनिवि शवि भिल्लानि इति सिद्धम् । अपापिनि पक्षीबहु-वचने नाशङ्का, केवलमेकवचनान्त साध्यते–तन्वेव 'पाक् रक्षणे,' ह्यस्त-

न्या अम्, समानदीर्घ, अडागमे, अपामिति सिद्धम्, अथवा 'पा पाने' अद्य०अम्, सिच्, 'पिब' ॥४।३।६६॥ इत्यादिना तस्य लुप्, न चेद्, शेष पूर्ववत्। चकारोऽनुक्तसमुच्चयार्थस्तेन अनुक्तमपि समुच्चीयते इति भवतीत्याद्यन्त शतृप्रत्यये सप्तम्येकवचनान्त ङीप्रत्ययान्त च आ मन्त्र्ये सौ, "नित्यदिद्द्विस्वराम्ब" ॥१।४।४३॥ इत्यादिना सिना सह ह्रस्वत्वे इत्थकार भवतीति पद सभवति, तथा अन्येऽप्येवजातीयस्वरूपा बुद्धयाऽनुसर्तव्या ॥ ११ ॥

अधीये नोपसृष्टस्य शक्यतीत्यस्य साधुता ।
जागर्तीति न जागर्तेरुच्यतीत्यस्य साधुता ॥१२॥

अधीये इति 'इङ् अध्ययने' वर्तमाने ए, अध्युपसर्गोपसृष्टम्, ततो "धातोरिवर्णो" ॥२।१।५०॥ इति इयादेशे अधीये इति सिध्यति, विपर्यये तु 'धीङ्च् अनादरे' ह्रस्तन्या इ, "दिवादे श्य" ॥३।४।७२॥ इति श्ये, "अवर्णस्ये" ॥१।२।६॥ इत्यादिना अकारस्य इकारेण सह एकारेऽडागमे च अधीये इति सिद्धम्। शक्यतीत्यस्य साधुता 'शक्लृट् शक्तौ वर्तमाना ते, क्ये शक्यते इति भाव्यम्, विपर्ययरूप तु 'शकीच् मर्षणे, इत्यस्य वर्तमाना तिव्, श्ये शक्यति इति। जागर्तीति न जागर्तेरिति 'जागृक् निद्राक्षये' वर्तमाना तिव्, गुणे जागर्ति रूपम्, धात्वन्तरस्य कथमुच्यते?– 'गृत् निगरणे' इत्यस्य गर्हित निगिरतीति वाक्ये "गृलुपसद–" ॥३।४।१२॥ इत्यादिना यङि तस्य लुपि, "सन्य ङश्च" ॥४।१।३॥ इति द्वित्वे, "ह्रस्व" ॥४।१।३९॥ इति पूर्वस्य ह्रस्वत्वे, "ऋतोऽत्" ॥४।१।३८॥ इति अ, "गहोर्जः" ॥४।१।४०॥ इति गस्य ज, "आगुणावन्यादे" ॥४।१।४८॥ इति अकारस्याकारे, व०ति, गुणे, जागर्तीति सिद्धम्। उच्यतीत्यस्य साधुता 'वचक् भाषणे' व०ते, "क्य शिति" ॥३।४।७०॥ क्ये "यजादिवचे किति" ॥४।१।७९॥ इति य्वृत्, उच्यते इति प्राप्नोति, उच्यतीति यथा सभवतस्तथोच्यते– 'उचच् समवाये' व०ति, "दिवादे श्य" ॥३।४।७२॥ इति श्ये उच्यतीति सिद्धम् ॥ १२ ॥

न्या अम्, समानदीर्घे, अडागमे, अपामिति सिद्धम्, अथवा 'पा पाने' अश्च०अम्, मिच्, "पिब" ॥४।३।६६॥ इत्यादिना तस्य लुप्, न चेद्, शेष पूर्ववत् । चकारोऽनुक्तसमुच्चयार्थस्तेन अनुक्तमपि समुच्चीयते इति भवतीत्यायन्त शतृप्रत्यये सप्तम्येकवचनान्त ङीप्रत्ययान्त च आ मन्त्र्ये सौ, "नित्यदिद्द्विस्वराम्ब" ॥१।४।४३॥ इत्यादिना सिना सह ह्रस्वत्वे इत्थकार भवतीति पद सम्भवति, तथा अन्येऽप्येवजातीयस्वरूपा बुद्धयाऽनुसर्तव्या ॥ ११ ॥

अधीये नोपसृष्टस्य शक्यतीत्यस्य साधुता ।
जागर्तीति न जागर्तेरुच्यतीत्यस्य साधुता ॥१२॥

अधीये इति 'इङ्क् अध्ययने' वर्तमाने ए, अध्युपसर्गोपसृष्टम्, ततो "धातोरिवर्णो" ॥२।१।५०॥ इति इयादेशे अधीये इति सिध्यति, विपर्यये तु 'धीङ्च् आदरे' इत्यस्या इ, "दिवादे श्य" ॥३।४।७२॥ इति श्ये, "अवर्णस्ये" ॥१।२।६॥ इत्यादिना अकारस्य इकारेण सह एकारेऽडागमे च अधीये इति सिद्धम् । शक्यतीत्यस्य साधुता 'शक्लृट् शक्तौ वर्तमाना ते, क्ये शक्यते इति भाव्यम्, विपर्ययरूप तु 'शकींच् मर्षणे, इत्यस्य वर्तमाना तिव्, श्ये शक्यति इति । जागर्तीति न जागर्तेरिति 'जागृर् निद्राक्षये' वर्तमाना तिव्, गुणे जागर्ति रूपम्, धात्वन्तरस्य कथमुच्यते ?– 'गृत् निगरणे' इत्यस्य गार्हित निगिरतीति वाक्ये "गृलुपसद–" ॥३।४।१२॥ इत्यादिना यङि तस्य लुपि, "सन्य ङश्च" ॥४।१।३॥ इति द्वित्वे, "ह्रस्व" ॥४।१।३९॥ इति पूर्वस्य ह्रस्वत्वे, "ऋतोऽत्" ॥४।१।३८॥ इति अ, "गहोर्ज" ॥४।१।४०॥ इति गस्य ज, "आगुणावन्यादे" ॥४।१।४८॥ इति अकारस्याकारे, व०ति, गुणे, जागर्तीति सिद्धम् । उच्यतीत्यस्य साधुता 'वचक् भाषणे' व०ते, "क्य शिति" ॥३।४।७०॥ क्ये "यजादिवचे किति" ॥४।१।७९॥ इति य्वृत, उच्यते इति प्राप्नोति, उच्यतीति यथा सम्भवस्तथोच्यते– 'उचच् समवाये' व०ति, "दिवादे श्य" ॥३।४।७२॥ इति श्ये उच्यतीति सिद्धम् ॥ १२ ॥

